# श्रीहनूमत्स्तोत्रम्

अक्षादिराक्षसहरं दशकण्ठदर्प-
निर्मूलनं रघुवराङ्घ्रिसरोजभक्तम् ।
सीताऽविषह्यघनदुःखनिवारकं तं
वायोः सुतं गिलितभानुमहं नमामि ॥ १॥

मां पश्य पश्य दयया निजदृष्टिपातैः
मां रक्ष रक्ष परितो रिपुदुःखपुञ्जात् ।
वश्यं कुरु त्रिजगतां वसुधाधिपानां
मे देहि देहि महतीं वसुधां श्रियं च ॥ २॥

आपद्भ्यो रक्ष सर्वत्र आञ्जनेय नमोऽस्तु ते ।
बन्धनं छेदयाभुक्तं कपिवर्य नमोऽस्तु ते ॥ ३॥

देहि मे सम्पदो नित्यं त्रिलोचन नमोऽस्तु ते ।
दुष्टरोगान् हन हन रामदूत नमोऽस्तु ते ॥ ४॥

उच्चाटय रिपून् सर्वान् मोहनं कुरु भूभुजाम् ।
विद्वेषिणो मारय त्वं त्रिमूर्त्यात्मक सर्वदा ॥ ५॥

सञ्जीवपर्वतोद्धार मम दुःखं निवारय ।
घोरानुपद्रवान् सर्वान् नाशयाक्षासुरान्तक ॥ ६॥

एवं स्तुत्वा हनुमन्तं नरः श्रद्धासमन्वितः ।
पुत्रपौत्रादिसहितः सर्वान् कामानवाप्नुयात् ॥ ७॥

मर्कटेश महोत्साह सर्वशोकविनाशक ।

 

शत्रून् संहर मां रक्ष श्रियं दत्वा च मां भर ॥ ८॥